ஸம்ஸ்க்ருத கல்விக் கழகம் மாத இதழ்,
212/13-1 செயிண்ட் மேரிஸ் ரோடு
மந்தைவெளி சென்னை-28

संस्कृतविद्यासमिति-पत्रिका

# संस्कृतश्रीः
# ஸம்ஸ்க்ருதஸ்ரீ:

தனி ப்ரதி
விலை ரூ. 4
JULY 2016

**Samskritasri**
A Monthly Journal of
Samskrit Education Society

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपो निधिम् ॥
सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

# THE SAMSKRIT EDUCATION SOCIETY (Regd) MADRAS

Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600 028.

President : Vaidya Sri S.V. Radhakrishna Sastri

Secretary & Treasurer : Sri G. SITHARAMAN, F.C.A.

Editor and Publisher Samskritasri : S. SRINIVASA SARMA
34, Senthamil Nagar,
Near : Indra Nagar & New Railway Station
Big Kancheepuram - 631 502
Cell No. 07402763830

பாடங்கள் நடத்துபவர்கள் :

| | | | |
|---|---|---|---|
| 1. | ஸ்ரீமதி சாந்தா ஸ்ரீநிவாஸன், | ஆழ்வார்ப்பேட்டை | 24353597 |
| 2. | ஸ்ரீமதி மாலதீ பாலசுப்ரமண்யம், | மேடவாக்கம் | 98841581[illegible] |
| 3. | ஸ்ரீமதி சாந்தி அசோக் | மந்தைவெளி | 24951[illegible] |
| 4. | ஸ்ரீமதி கௌரீ கருணாகரன், | மைலாப்பூர் | 243205[illegible] |
| 5. | ஸ்ரீமதி ரமாசுந்தரராஜன், | சென்னை-95 | 65687635 |
| 6. | ஸ்ரீமதீ பார்வதீ ராமசந்திரன் | அண்ணா நகர் | 26215719 |
| 7. | ஸ்ரீ R. முத்து கிருஷ்ணன் | கொரட்டூர் | 26872430 |
| 8. | ஸ்ரீ S. ரங்கநாத சர்மா, | சேலையூர் | 22291720 |
| 9. | ஸ்ரீமதி புவனேச்வரீ | ராஜகீழ்பாக்கம் | 9841212047 |
| 10. | ஸ்ரீ K. ராஜேச்வரீ | மாடம்பாக்கம் | 9962837319 |
| 11. | ஸ்ரீ S. ஹரிஹரன் | நங்கைநல்லூர் | 9841403859 |
| 12. | ஸ்ரீ S. அனந்தன் | மதுராந்தகம் | 9894709418 |
| 13. | ஸ்ரீ P.R. சுப்ரமண்யம் | K.K. நகர் | 23640864 |
| 14. | ஸ்ரீ N. ஜானகீ ராமசாஸ்த்ரீ | I.T.I. கிண்டி | 24953144 |
| 15. | ஸ்ரீ R. ஸ்ரீநிவாஸகோபாலாசார்ய | ஸ்ரீரங்கம் | 2430632 |
| 16. | ஸ்ரீமதீ ராஜம் சுந்தர் | திருநெல்வேலி | 9488326850 |
| 17. | ஸ்ரீ T.V. ஸ்ரீநிவாஸ தாதாசார்ய | காஞ்சீபுரம் | 27269153 |
| 18. | ஸ்ரீ P.D. ஸ்ரீநிவாஸன், | திருநின்றவூர் | 9445703470 |
| 19. | ஸ்ரீ R. ரங்கநாதன் | காஞ்சீபுரம் | 97910 55428 |
| 20. | ஸ்ரீ C.A. ஏகாம்பரம் | கோயம்புத்தூர் | 0422-2233242 |

21. ஸ்ரீமதி டி.வி. ஜயலக்ஷ்மி சர்மா, புன்குன்னம், த்ரிசூர்-680 002, 0487-2382964

22. ஸ்ரீமதி கௌரிவேங்கடராமன், காட்கோபர், மும்பை (E) 09757115154

23. ஸ்ரீ V. கோதண்டராமன், Mrs. கீதா ரேகா, ஆதம்பாக்கம், சென்னை 9444469638

Text Composing at : V.K.N. Enterprises, 9840217036

# संस्कृतश्रीः

मालाः : 38 JULY-2016 पुष्पम् 8

कलि : 5109 दुर्मुखि-कर्कटकमासे 38—9

The Samskrit Education Society Established with the blessings of His Holiness SRI MAHASWAMIGAL of Kanchi Kamakoti Peetam in the year 1957.

OFFICE:

Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai - 600 028.

PRESENT ACTIVITIES

1. Assisting study of Sanskrit.
2. Publication of books and monthly journal SAMSKRITASRI.





SUBSCRIPTION RATES

| | |
|---|---|
| ANNUAL : | Rs. 40/- |
| LIFE SUBSCRIPTION | Rs. 400/- |
| Page Donation | Rs. 200/- |

Subscription and donations may be sent in the form of crossed D.D./Drawn in favour of the Secretary and Treasurer,

"DD/Cheque should be sent by Speed Post only"

The Samskrit Education Society (Regd.) .
Old 212/13-1, St.Mary's Road, Mandaiveli,
Chennai - 600 028. Ph: 044-2495 14 02
samskritasri@gmail.com

# जगद्गुरु श्री चन्द्रशेखरेन्द्रसरस्वती मङ्गलाष्टकम् ।

—कूडलूर् वेद-वेदान्तविद्वान् श्रीरामचन्द्रशास्त्री, कुम्भकोणम् ।

काञ्चीपुरनिवासाय वाञ्छितार्थप्रदायिने ।
सर्वलोकशरण्याय शान्तरूपाय मङ्गलम् ।। १

कल्याणगुणशीलाय कलिदोषविनाशिने ।
परिव्राजकराजाय पुण्यश्लोकाय मङ्गलम् ।। २

सदाशिवस्वरूपाय चारुकाषायधारिणे ।
तापत्रयविनाशाय तपोनिष्ठाय मङ्गलम् ।। ३

परमार्थप्रकाशाय ज्ञानिने धर्मदर्शिने ।
सर्वशास्त्रविदे तस्मै कृपापूर्णाय मङ्गलम् ।। ४

हंसमन्त्रार्थतत्त्वाय हरीशाभेददर्शिने ।। ५

शरदिन्दुप्रकाशाय सच्चिदानन्दरूपिणे ।
चन्द्रमौलीशभक्ताय शङ्करांशाय मङ्गलम् ।। ६

क्षमया भूमितुल्याय स्मितपूर्वाभिभाषिणे ।
अवतारवरिष्ठाय भसिताङ्गाय मङ्गलम् ।। ७

श्रीकामकोटिपीठेशचन्द्रमौलीशमूर्तये ।
मिथ्याज्ञानच्छिदे तस्मै यतीन्द्रायास्तु मङ्गलम् ।। ८

श्रीकूटकाञ्चीवास्तव्य रामकृष्णमहागुरोः ।
कृपया रामचन्द्रेण शिष्येण स्तुतमष्टकम् ।। ९

मङ्गलाष्टकमेतद्वै चन्द्रशेखरसद्गुरोः ।
ज्ञानदं मोक्षदं दिव्यं सर्वसिद्धिप्रदायकम् ।। १०

यः पठेत्प्रयतो नित्यं सादरं गुरुसन्निधौ ।
लभते स परमां सिद्धिं स्वस्वरूपे प्रकाशते ।। ११

श्री जगद्गुरुचन्द्रशेखरेन्द्रसरस्वती मङ्गलाष्टकं सम्पूर्णम् ।।

# करुणामृतम् । *श्रीगुरुवायुपुरेशवैभवम् - (अनुवर्तते)*

*—तामरश्शेरि शङ्करन् भट्टतिरिकृतम् ।*

एकं वचोऽपि करुणाकर ! भक्तियुक्तं
प्रीतिप्रदं यदि, न विस्मरसि प्रयुक्तम् ।
विद्याधरस्तव सुदर्शननामधेयः
स्नेहस्य भाजनमभूदुचितैकसूक्त्या ।

स्नेहप्रकाशनमिदं तव कीर्तनीयं
यच्छङ्खचूडवधलब्ध - विशिष्टरत्नम् ।
प्रीत्याऽग्रजाय ददिथाऽच्युत ! तेन धार्यं
स्वेनैव कौस्तुभमतः परमित्यनूनम् ।।

त्वन्निग्रहागतमुपात्तवृषस्वरूप-
मौचित्यपूर्वमवधीः त्वमरिष्टदुष्टम् ।
भाग्यं किमेतदयमाप न मुक्तिमात्रं
नाम्ना युतश्च तव कीर्तिमरिष्टहन्तः ! ।।

पूर्वस्व भावधृतपूर्णहयस्वरूपः
केशी विनिन्द्यचरितोऽप्यभिनन्दनीयः ।
यन्निग्रहप्रथितकेशवनामधेय-
सङ्कीर्तनेन तव यान्ति जनाः शुभानि ।।

नन्दालयं जिगमिषुः पथि गान्दिनेयः
चिन्तां त्वदीयपदभक्तितरङ्गिताशाम् ।
यामाप, सा यदि मनस्युदिता कदाचित्
त्वद्दर्शनेन सफलं जननं ममापि ।।

पुत्र ! त्वया बहुजनं नगरं न दृष्टम्
पित्रा सहैव पथि सञ्चर ! शीघ्रमेहि ।
इत्यादि मातृवचनं मथुराप्रयाणे
श्रुत्वा किमात्तपुलको जगदीश ! नाऽभूः ? ॥

अक्रूरनीतमचिरान्मथुराप्रविष्टं
वस्त्रोत्तरीयवनमाल्यसुमादिभिस्त्वाम् ।
आराध्य वायक-सुदाममुखाः कृतार्थाः
तं त्वां नमामि कृपयाऽपि मयि प्रसीद ! ॥

अत्युद्धतं रजकमर्थितराजवस्त्र-
माक्षेपकारमिव सच्छकुनेन तुष्टः ।
एकप्रहारविधुतार्जितपूर्वपापं
मुक्तं व्यधाः, शुभकरं तव सर्वकर्म ॥

अङ्गीकरोष्यनुपमानि विभूषणानि
पीताम्बरं च वनमाल्यमयूरपिञ्छे ।
अर्हन्त्युदाहरणतामति भाग्यवन्ति
त्वां विश्वमोहनमवाप्य जयन्ति तानि ॥

शुद्धाङ्गरागमुपगृह्य विना विलम्बं
अब्जात्मजामिव चकर्थ मनोज्ञरूपाम् ।
कुब्जामतिप्रणयतस्तु निजाद्यपत्नीं
दत्तान्तरङ्गमव मामपि दीनबन्धो ! ॥

एकैककर्मपरिलब्धभवत्प्रसादाः
सन्ति, श्वफल्कसुत-गर्ग-सुदाममुख्याः ।
गोविन्द ! तादृशमनेककृतेषु कर्म-
स्वेकं भविष्यति ममापि कदाभिकाम्यम् ? ॥

सीतास्वयंवरकृते ननु चापभङ्गः
पूर्वं कृतस्तदनुवृत्तिरिहापि सिद्धा ।
उद्दिश्य नोद्वहनमत्यधिकानपेक्षं
किन्तूग्रसेनसुतसैनिकनिग्रहार्था ॥

द्वारि स्थितं गजवरं प्रसभं निहत्य
भ्रात्रा समं प्रविशति त्वयि मल्लशालाम् ।
नानारसेषु कतिधा न ममज्जुः
तं त्वां स्मरामि, विजहामि च सर्वभीतिम् ॥

अंसे वहन्तमयि नन्दज ! दन्तिदन्तं
अग्र्येण चानुगतमञ्चितहासवन्तम् ।
आनन्दमग्रसुकृतिप्रणुतं भवन्तं
अन्तः स्मरन् पुलककञ्चुकितोऽस्म्यमन्दम् ॥

चाणूर-मुष्टिक-शलादिकदुष्टवर्ग-
हन्तारमग्रजयुतं पशुपालबालैः ।
साकं प्रदर्शितमनोहरनर्तनं त्वां
संस्मृत्य को न लभते भुवि पूर्णमोदम् ॥

सर्वत्र कृष्ण ! तव रूपनिरीक्षणेन
भीत्या च सन्ततकृतस्मरणेन कंसम् ।
सारूप्यमुक्तिचरितार्थमिहाकृथास्ते
तस्मै नमो, भवति भीरपि यत्र भक्तिः ।

दुष्टोऽपि निन्द्यचरितोऽप्ययि कृष्ण ! कंसः
सारूप्यमुक्तिमगमन्निहतस्त्वयैवम् ।
ब्रह्मादिवैरिसुरवर्यनुतिं च हन्त !
लब्धोन्नतिर्भवति नीचजनोऽपि मान्यः ॥

कारानिकेतपरितप्त-विमुक्तपित्रोः
सन्तोषगाय च तथाविधमुग्रसेनम् ।
सप्रश्रयं नियमितुं नृपतिं त्वयोक्तं
श्रुत्वा न कस्य हृदयं द्रुतमश्रुरूपम् ॥

गोविन्द ! वत्सलपिता विविधोपहारैः
मातुर्मनस्सुखकरैस्सहितस्सबाष्पम् ।
प्रस्थापितः स्वनिलयाय कथं त्वयेति
नास्त्येव वर्णयितु मत्र वचस्समर्थम् ! ॥ *(अनुवर्तते)*

स भारः सौम्य ! भर्तव्यो यो नरं नावसादयेत् ।
तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ॥

தூக்குவதில் பிரயாசையோ கஷ்டமோ இல்லாத சுமையைத் தான் தூக்க வேண்டும். எந்த உணவு, உண்டபொழுது இயல்பாக ஜீரணிக்குமோ, நோய்க்கு இடமாகாதோ அந்த உணவைத்தான் உண்ண வேண்டும் மேலும்,

यत् कृत्वा न भवेत् धर्मो न कीर्तिर्न यशो भुवि ।
शरीरस्य भवेत् खेदः कस्तत् कर्म समाचरेत् ॥

எந்த வேலையைச் செய்யுங்கால் யாதொரு தர்மமோ ! கீர்த்தியோ, புகழோ உண்டாவதில்லையோ (மாறுக) உடல் களைப்பு மட்டுமே உண்டாகுமோ அந்த வேலையை எவனும் செய்ய முன் வருவதில்லை !

*—வா. ராமாயணம், ஜடாயுவாயிலாக.*

# ज्योतिषम् ।

—मधुकरः

सखा ममासकृदनुयुञ्जान एव वर्तते-कुतस्संस्कृतश्रियां ज्योतिषं नास्तीति । सख्युरभिप्रायः सम्यङ्ननु अवबुद्ध्यते-यदयं विषयः मोक्षमपहाय त्रिष्वन्येषु पुरुषार्थेषु व्याप्नुवानः पण्डित-पामर भेदं विना, आस्तिकनास्तिकभेदं विना, धनिक-दरिद्रभेदं विना स्त्रीपुरुषभेदं विना सर्वैस्समानतया सर्वत्र समाद्रियते ! वार्षिक-मासिक-पाक्षिक-साप्ताहिकदैनिकपत्रिकासु न केवलं, प्रत्युत दूरदर्शिनी-दूरवाणी-प्रभृतिष्वपि अतिस्वारस्यतया सर्वैः प्रतीक्ष्यमाणोऽयं विषय इति । संस्कृतपत्रकारलोके तु नैतावता प्ररूढप्रौढितामध्यारोपितः इति तु सत्यम् । न तावता ज्योतिषविषयः तिरोहितस्तेषामपि । कर्मब्रह्मवादिनां तु नितराम् ।

ज्योतिषं नाम, ज्योतिरधिकृतो ग्रन्थः । यज्ञकर्मप्रधानाः वैदिका इति विदितमेव । ते यज्ञाः कासुचिदेव तिथिषु, केषुचिदेव मासेषु, ऋतुषु, नक्षत्रेषु च कर्तव्या इति यज्ञपराणां तेषां विशिष्य कालपरिज्ञाने तदुपाये च ऐदम्पर्यमभवत् ।

सूर्यस्य एका परिवृत्तिस्तावद्दिनपरिच्छेदे साधनीभवति । तथाऽपि प्राचामार्यजनानां तिथिप्रधानत्वात् चन्द्र एव कालपरिमाणे प्रधानसाधनमभूत् । संस्कृते, ग्रीक्-जर्मन् भाषासु च समानं चन्द्रस्य नाम । तत् परिणामार्थाद्धातोर्निष्पन्नम् । तदेतत् इण्डो-यूरोपियन्जन-पृथग्भावात्पूर्वमेव चन्द्रः कालपरिच्छेदे प्रधानसाधनतयाऽभिमत इति ज्ञापयति । तथा चन्द्रस्य मासस्य च नामसाम्यं, तस्मिन्नेव प्राचीने काले चन्द्रमानेन कालनिर्णयः कश्चिदासीदिति दर्शयति । ऋक्संहितायाम् — 'अथो नक्षत्राणामेषामुपस्थे सोम आहितः' - इत्युच्यते । तेन

चन्द्रस्य अश्विन्यादिनक्षत्रेषु सञ्चारः प्राचामार्यभारतीयानां विदितः इति स्फुटीभवति । 'राका, सिनीवाली, गुङ्गुः' इत्येवं चन्द्रस्य अवस्थाविशेषानुसारेण नामभेदः कृतो दृश्यते । एता राकादयो, देवताः कृताः अभिमतमर्थं प्रार्थ्यन्ते ।

किं च द्वादशभ्यो मासेभ्यः परं त्रयोदशोऽपि मासः परिगण्यते । यजुस्संहितायां मासानां देवतात्वं कृत्वा, तदर्थं हवींषि परिकल्प्यन्ते । तत्र अन्ते त्रयोदशं हविः अंहस्पतये विधीयते, यः त्रयोदशस्य मासस्य अधिष्ठाता । एतेन सौरमानं चान्द्रमानं उभयं तदा विज्ञातमासीदिति निश्चेतव्यं भवति । तै.ब्राह्मणे, वाजसनेयिसंहितायां च नक्षत्रदर्शः गणकः इति ज्यौतिषिकस्य, छान्दोग्योपनिषदि नक्षत्रविद्या इति ज्योतिषस्य च नामनिर्देशः दृश्यते । एवं ऋक्संहिताकालात्प्रभृति ज्येतिर्विषया चिन्ता प्रवृत्तेति, उपनिषत्काले पृथग्विद्यास्थानत्वेनैव ज्योतिषं प्रसिद्धमासीदिति च स्पष्टं जानीमः ।

अथाद्य ज्ञायमानान् ज्योतिषग्रन्थान् परिशीलयेम । तत्र प्राचीनतमः वेदाङ्गज्योतिषमिति प्रसिद्धः अल्पो ग्रन्थः । ऋग्वेदीयत्वेन, यजुर्वेदीयत्वेन च द्वेधा अयं ग्रन्थः प्रवृत्तः । तत्राद्ये केवलं षट्त्रिंशत् श्लोकाः सन्ति । सप्तखण्डात्मना च विभक्तास्ते । प्रतिखण्डं पञ्चश्लोकाः, सप्तमे परं षट् । यजुर्वेदीये त्रिचत्वारिंशत् श्लोकाः । क्रमान्तरेण च केषांचित् श्लोकानामत्र पाठः । कोऽस्य वेदाङ्गज्योतिष ग्रन्थस्य कर्तेति न ज्ञायते ।

'कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मनः ।' इति यजुर्वेदीये उपक्रमे दृश्यते । तेन लगधो नाम कश्चित् ज्यौतिषिक आसीत्, तदीयः सिद्धान्तः इह प्रतिपाद्यते इति ज्ञायते । अस्मिन् ग्रन्थे श्लाकानामर्थः प्रायेण दुरधिगमः एव । कालनिर्णयोपयोगितया तु स्पष्टार्थमिदमर्धं भवति । —

'प्रपद्येते श्रविष्ठादौ सूर्याचन्द्रमसावुदक्' इति। तथा कश्चित्संपूर्णः श्लोकोऽपि वर्तते। यथा—

स्वशक्तमेते चन्द्रार्कौ यदा साकं सवासवौ।

तदादि तु युगं माघस्तपः शुक्लोऽयनं ह्युदक्॥ इति।

सवासवौ वसुदेवताकश्रविष्ठानक्षत्रयुक्तौ इत्यर्थः। एवं श्रविष्ठारम्भे उत्तरायणोपक्रम इति इह प्रतिपादनात्, अद्य च पूर्वाषाढादेशे तदुपक्रमदर्शनात् एवंविधविपर्यासानुगुणकालपरिसंख्याने क्रिस्तोः प्राक् द्विशतीसहस्रं स कालः इति सिद्ध्यतीति, तत्प्रतिपादकज्योतिष-ग्रन्थस्याप्यस्य स एव कालः इत्यनुमातुं शक्यते।

अस्त्यथर्वज्योतिषमित्यपि कश्चन ग्रन्थः। पूर्वापेक्षयाऽयं अतीवार्वाचीनः। अत्र सप्तदश प्रकरणानि। आहत्य द्विषष्टिशतं श्लोकाः। तिथिभिः सह करणानां योगानां च प्रतिपादनं तथा भानु - सोमादिवारकथनं च अस्यार्वाचीनत्वे लिङ्गम्। ग्रीस्-देशीय ज्यौतिषिकसमागमवशेन द्वादशराशिरूपेण ज्योतिर्मार्गं विभज्य विषयनिरूपणं क्रियमाणं अर्वाचीनेषु सिद्धान्तग्रन्थेषु पश्यामः। तस्यात्र अदर्शनात् तेभ्यः प्राचीनोऽयं ग्रन्थः इति तु निश्चीयते।

केवलमेक एव वेदाङ्गज्योतिषग्रन्थः (अस्मद्विदितः) वैदिककर्मानुष्ठानोपयुक्तकालनिर्णयोद्देशेन प्रवृत्तः। अन्ये तु इदानीं तनाः- ज्योतिषग्रन्थाः लौकिकव्यवहारेषु दत्तदृष्टयः। यः कोऽपि हि विषयः, बुद्धिमद्भिश्चिन्त्यमानश्चेत् बहुधा विस्तीर्णो भवति। तेन उपक्रमे अल्पाऽपि इयं ज्योतिर्विद्या कालक्रमेण विस्तृता बभूव। एवं विस्तारे अत्रत्यानां ग्रीस्देशीयैस्समागमः प्रधानकारणं भवतुमर्हति। ग्रहादीनां तद्देशीयानि नामानि तानि बहूनि वराहमिहिरादिभिः स्वस्वग्रन्थेषु

उपयुक्तानि दृश्यन्ते । तदेतत् ग्रीस् देशीयव्यवहारपरिज्ञानं अत्रत्यानामभूदिति निश्चाययति ।

गर्गः पराशरः इत्येतदादयः केचित्प्राचीनाः गर्गसंहितापराशरसंहितासमाख्यातज्योतिषग्रन्थकाराः आसन्निति अर्वाचीनैरुदाहरणात् ज्ञायते । पञ्च सिद्धान्ता इति प्रसिद्धाः अपरे प्राचीनतमाः ग्रन्थाः; त इमे—

१. ब्रह्मसिद्धान्तः (पैतामहसिद्धान्तापरनामा)

२. सौरसिद्धान्तः

३. पौलिशसिद्धान्तः

४. रोमकसिद्धान्तः

५. वसिष्ठसिद्धान्तः

तत्र ब्रह्मसिद्धान्तनामानस्त्रयो ग्रन्थाः । (a) विष्णुधर्मोत्तरात् उद्धृत एकः *(b)* शाकल्यसमाख्यातोऽपरः, *(c)* ब्रह्मगुप्तकृतः अन्यः । एवं वसिष्ठसिद्धान्तोऽपि त्रिविधः । *(a)* लघुवसिष्ठः, *(b)* वृद्धवसिष्ठः *(c)* विष्णुचन्द्रकृत इति । एवमन्येऽपि सिद्धान्ताः प्राचीना एवासन् तानुपजीव्यान्यैः अर्वाचीनैः कृताः अन्य एवेति वक्तव्यं भवति ।

तत्र सौरसिद्धान्तः लगधकृतः स्यात् इति संभावयन्ति । पौलिशसिद्धान्तः पुलिशेन कृतः । अयं ग्रीस् देशीय इति केषांचिदूहः । रोमकसिद्धान्तः क्षीषेण कृतः । पाश्चात्यदेशविशेषस्य नाम रोमक इति । तत्रत्यविषयसङ्कलनात् इत्थं नामेति वदन्ति ।

एभ्यः सिद्धान्तेभ्यः परं अतिप्रसिद्धो ज्यौतिषिकः आर्यभटः-आर्यभट्ट इत्यपि स्यात् । एतत्कृता ग्रन्था इमे आर्याष्टशतम्, (२)

दशगीतिका, (३) लघ्वार्यसिद्धान्तः, (४) अहर्गणः, (५) अन्यश्च कश्चित् गणितग्रन्थः इति। अत्र एकद्वाः सम्प्रति अप्रसिद्धाः। अन्यस्य सर्वस्य आर्यभटीयमिति प्रसिद्धिः। पाटलीपुत्रे ४७६ आङ्गलवर्षे अयं जात इति तस्यैव वचनादवगम्यते। भूमेर्भ्रमणं, सूर्यस्य च स्थैर्यं अयं निश्चाययति स्म । तथा, चन्द्रसूर्योपरागस्वरूपमपि सम्यङ्निरूपयामास।

आर्यभटस्यानन्तरं प्रसिद्धः वराहमिहिरः (विहिर इत्यपि) ५०५ वर्षे जतः, ५७८ संस्थितश्चेति कश्चिद्विपश्चिदाह।

बृहज्जातकम्, लघुजातकम्, बृहत्संहिता, पञ्चसिद्धान्तिका इति चत्वारः अस्य ग्रन्थाः। प्रागुक्त-सिद्धान्त- पञ्चकसार प्रतिपादनपरत्वात् चरमो ग्रन्थ; पञ्चसिद्धान्तिकेत्याख्यायते । मनुष्याणां भूतभाविशुभाशुभपरिज्ञानोप-युक्ताः आद्यास्त्रयो ग्रन्थाः। ग्रहस्थानसञ्चारादिविवेकोपयुक्त अन्तिमः। एवंविधस्य ग्रन्थस्य करणमिति सामान्यसमाख्या।

एतदनन्तरकाले प्रसिद्धः ब्रह्मगुप्तो नाम ज्यौतिषिकः। ब्रह्मस्फुटसिद्धान्तो नाम एतत्कृतो ग्रन्थः। तथा करणग्रन्थोऽपि कश्चित् तेन कृतः इति ज्ञायते। ५९८ वर्षे अस्य जननम्।

अथ सुप्रसिद्धश्चरमोज्यौतिषिकः भास्करो नाम। अस्य जननवर्षं ११९४ तमम्। एतदीयः सिद्धान्तशिरोमणिर्नाम सूर्यसिद्धान्तानुसारी ग्रन्थोऽद्यापि ज्योतिर्विदां परमप्रमाणभूतः। तथा करणकुतूहलम्, वासनाभाष्यम्, लीलावती, बीजगणितम्, इत्यन्येऽपि बहवो ग्रन्थाः एतत्कृताः। एते प्रसिद्धतमाः कतिपये ज्यौतिषिका निर्दिष्टाः। व्याख्यातारः स्वतन्त्रग्रन्थकाराश्चान्ये बहवः सन्ति। यथावसरं यथाविदितमन्यदा निरूप्यन्ते। प्रामाणिका ज्योतिषविदश्चाद्यतनाः, अस्मिन्विषये विलिख्य अस्माकमुपकारं विधातुमर्हन्ति।

# गजरोदनं वनरोदनमेव ।

—डा. टि. नारायणन् कुट्टि, चेन्नै

अस्माकं देशे गजानां पीडनकाल एव इति मन्ये । निदाघकाले विशेषदेवालयोत्सवाः अघोष्यन्ते । गजाभावे न देवालये उत्सवकार्यक्रमः । न केवलं हैन्दवदेवालयेषु, किं तु ईशवीया अपि गजोपरिपरिवारैः पथसञ्चलनं सज्जीकुर्वन्ति । अहम्मदीयाः चन्दनघटस्य आनयनं, (गजोपरि संथाप्य) नगरे प्रदक्षिणं च गजैः कारयन्ति । यदि विशिष्टातिथयः यथा मन्त्रिप्रमुखा अथवा दलनेतारो वा आगच्छन्ति, तर्हि गजाः पङ्क्तिबद्धाः स्थापनीयाः इति केरलसम्प्रदायः । ते सर्वदा नेतारः विलम्बेनैवागच्छन्ति । अतः बालिकाभिः स्त्रीभिः सह, गजवीरा अपि नेतॄणामागमनपर्यन्तं कठिनातपे स्थातव्याः । गजैः पूर्वजन्मनि पापसञ्चयः सम्पादितः स्यात् इति मन्ये । तद्वशादेव अस्मिन् जन्मनि आतपोष्णं सोढ्वा क्लेशानुभवः तेषां जायते ।

वस्तुतः मानवकृतापराधेन मनुष्योपकारिणः मृगाः दुरितमनुभवन्ति । 'अस्माकं आवासस्थानस्य वनस्य नाशं कुरु' इति गजैर्न खलु प्रार्थितम् । देवालयोत्सवेषु प्रगाढोष्णवीथ्यां, 'टार्' खचितोष्णप्रतलेषु वा होराचतुष्टयं यावत् स्थातव्यं, तदपि विना चलनं, इत्येतत् गजस्येच्छा नास्ति, किं तु अत्याशादुर्भरितस्य मानवस्य । गजः स्नेहशीलः, निष्कलङ्कः बालः इव स्वामिने स्निह्यति । भाषां न वदति गजः, किं तु हस्त्यारोहस्य या कापि वा भाषा भवतु गुजरात्ती, मराठी वा तां भाषां अवगच्छति । गजः मान्यः गम्भीरः, यथा भर्तृहरिः— 'गजपुङ्गवस्तु धीरं विलोकयति चाटुशतैश्च भुङ्क्ते' (भर्तृ. नीति. ३१) इति । प्राचीने काले सिंहो वनराजः आसीत् । अद्यतने काले महालुण्टाकः आयुधधारी गजहन्ता कोऽपि वनराजः । सिंहः आसीत्

कुञ्जरकुम्भभञ्जकः, यथा —'मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य' इति। किं तु संप्रति आधोरणाः हस्तिकुम्भं तोत्रेण सृण्या च भेदयन्ति।

तृश्शिवपेरूर् वृषाचलेश्वरसान्निध्ये वार्षिकं पर्व 'पूरं' नाम्ना प्रचाल्यते। 'तत्र गजाः न प्रदर्शनीयाः' इति उन्नतमन्यायालयात् आज्ञा आगता। किं तु राजनैतिकप्रमुखैः झटिति सा आज्ञा स्थगिता। देवस्य चित्रप्रतिकृतिफलकं शिरसि आरोप्य गजराजैः उत्सवः पूर्ववत् समभवत् स्फोटकप्रदर्शनं यत् रूद्धमासीत्, तदपि यथाविधि (रोधमतिक्रम्य) प्रस्फोटितम्। तत्र गजपीडनं बहु जातम्। कठिनातपे व्रणयुक्ताः गजाः स्थगायिताः। जलं न दत्तम्, शृङ्खलाबन्धनं चतुर्षु पादेषु आसीत् इत्यादि दोषजालस्य विवरणं न्यायालये समर्पितमस्ति। कस्य वा दोषः? अतिलोभिनां मनुष्याणां एव इति कथने नातिशयोक्तिः।

पुरा भारतीयैः गजानां मुख्यं स्थानं दत्तमासीत् 'गजविराजितमन्दगतिः' स्त्रीणां दत्ता वर्तते। 'गजस्नानं तु निष्फलम्' इति हास्याय। मत्तेभः पांसुस्नानेन सन्तुष्टः भवति। समतुलनमपि कृतम्— 'अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया'। तस्मात् गजस्य स्नानं नावश्यकमित्यर्थः वा? नास्त्येव। गजः जलक्रीडां इच्छति। अनेकपस्य तस्य स्नानार्थं पानार्थञ्च बहुजलं आवश्यकम्। 'जीवनं जलं, कदाचित् तत् न लभ्यते चेत्' तस्मादेव स क्रुद्धः स्यात्। केन कारणेन, अतिनीचमनुष्य-कारणात्। कतिपयदिनेभ्यः प्राक् सहृदयः जनार्दन हेगडेवर्यः एवं रचितवान् गजेन्द्रमधिकृत्य—

हस्ती हस्ती हस्ती दिव्या दैवी सृष्टिः
कदलीसदृशी शुण्डा स्तम्भसमानाः पादाः।
शूर्पाकारौ कर्णौ धवलौ दीर्घौ दन्तौ॥

उदरं भाण्डाकारम् उन्नतबृहच्छरीरम्।
अल्पं तुच्छं पुच्छम् अहो आहा विचित्रम् ! ॥

दिशां नामानि प्रसिद्धानि । तत्र क्रमात् तत्रत्याधिपतीनां नाम-सूचकत्वेन ऐन्द्री, आग्नेयी, याम्या, नैऋति, वारूणी, वायव्या, कौबेरी, ऐशानी इति नामानि सन्ति । तत्रत्याः दिग्गजा; क्रमात् ऐरावतः, पुण्डरीकः, वामनः, कुमुदः, अञ्जनः, पुष्पदन्तः, सार्वभौमः सुप्रतीकः इति । तेषां करिण्यः क्रमात् अभ्रमु, कपिला, पिङ्गला, अनुपमा, ताम्रकर्णी, शुभदन्ती, अङ्गना, अञ्जनावती इति च । अनेनावगम्यते तावत्पावनत्वं गजानां प्रदत्तमिति । वयं गजान् रक्षामः, अन्यथा साक्षात् चक्रपाणिना गजेन्द्रस्येव अस्माकं अपि मोक्षः भविता ।

यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः ।
न श्लेषमुपगच्छन्ति तथा नार्येषु सैहृदम् ॥

यथा शरदि मेघानां सिञ्चतामपि गर्जताम् ।
न भवत्यम्बुसंक्लेदः तथा नार्येषु सौहृदम् ॥

தாமரையிலைகளில் விழுந்த தண்ணீர்த் துளிகள் இலையுடன் ஒட்டிக்கொள்வதில்லை. அதுபோல் நல்லொழுக்க சீலர்களிடம் கூட பற்றுதல் (நட்பு) உண்டாவதில்லை, 'ஶரத்' காலத்தில் மேகங்கள் ஒன்றுசேர்ந்து இடியுடன் பொழியுமேயானாலும் பூமியில் நனைவு உண்டாகாது, அதுபோல் மேனேக்குடையவரிடமும் நட்புறவு உண்டாவதில்லை.

—வா. ராமாயணம். யுத்தகாண்டம்.

# तिरुक्कुरल् – संस्कृतपद्यरूपानुवादः ।

## திருக்குறள் --குறிப்பு அறிதல்.

கூருமை நோக்கி குறிப்பு அறிவான் எஞ்ஞான்றும்
மாருநீர் வையக்கு அணி. 1

नृपतेर्हि मनोभावं वीक्ष्य तन्मुखलोचनम् ।
जानन्नमात्यो जगतस्सागरान्तस्य भूषणम् ।। 1

ஐயப் படாஅது அகத்தது உணர்வானைத்
தெய்வத்தோடு ஒப்பக் கொளல். 2

अन्तःकरणभावं यो वेत्ति निस्संशयं भुवि।
निष्प्रपचं स दैवेन समानः परिगण्यते ।। 2

குறிப்பின் குறிப்புஉணர் வாரை உறுப்பினுள்
யாது கொடுத்தும் கொளல். 3

स्वान्तःकरणभावेन परचित्तावबोधिनः ।
स्वाङ्गेषु मुख्यं किमपि दत्वोरीकुरुतां नृपः।। 3

குறித்தது கூருமைக் கொள்வாரோடு ஏனை
உறுப்புஓர னையரால் வேறு 4

अनुक्तान्यमनोभाववेदिनः प्राज्ञतल्लजाः।
आकृत्यान्यैस्समा भूत्वाप्यत्यन्तं पृथगेव हि ।। 4

குறிப்பின் குறிப்புஉணரா ஆயின் உறுப்பினுள்
என்ன பயத்தவோ கண். 5

सुनिरीक्ष्य निजाक्षिभ्यामेवेतरमनोगतम् ।
भावं ज्ञातुमशक्तश्चेत्तच्चक्षुर्भ्यां हि किं फलम् ?।। 5

அடுத்தது காட்டும் பளிங்குபோல் நெஞ்சம்.
கடுத்தது காட்டும் முகம்.

नेदीयांसीह वस्तूनि दर्शयेत्स्फटिकं यथा ।
तथैव चित्तविकृतिः वदने प्रतिफल्यते।। 6

முகத்தின் முதுக்குறைந்தது உண்டோஉவப்பினும்
காயினும் தான்முந் துறும்.

आननादधिकाभिज्ञं किं वाङ्गमितरत्क्षणाम् ।
प्रहर्षक्रोधयोः काले पुरस्तिष्ठेत्स्वयं खलु ।। 7

முகம்நோக்கி நிற்க அமையும் அகம்நோக்கி
உற்றது உணர்வார்ப் பெறின். 8

परचित्तस्थविषयान् ज्ञातुं शक्ता भवन्ति चेत् ।
मुखं मेधाविनां तेषामनुसृत्य स्थितिर्वरा ।। 8

பகைமையும் கேண்மையும் கண்உரைக்கும் கண்ணின்
வகைமை, உணர்வார்ப் பெறின். 9

राजदृष्टिप्रभेदानां वेत्तारो यदि मन्त्रिणः।
तेभ्यो वैरश्च मैत्रीं च ब्रूयातां नृपलोचने ।।

நுண்ணியம் என்பார் அளக்கும்கோல் காணும்கால்
கண்அல்லது இல்லை பிற. 10

सुसूक्ष्मद्रष्टृतां स्वेषु सचिवानां प्रशंसताम्।
मातुं भूपतिचित्तानि मानयष्टिर्हि लोचने ।। 10

विद्यते गोषु सम्पन्नं विद्यते ब्राह्मणे दमः ।
विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ।।

பசுமாடுகளிடம் ஒன்று திரண்ட செல்வம் உள்ளது. பிராமணனிடம் புறக்கரணவடக்கம் உள்ளது. பெண்கள்பால் சிற்ருசையும் உண்டுதான். (அதேபோல்) உற்ருர் உறவனரிடமிருந்து பயம் உள்ளது.

—வா. ராமாயணம், யுத்தகாண்டம்

# रघुवंशे द्वादशसर्गे - तृतीयः श्लोकः

सा पौरान् पौरकान्तस्य रामस्याभ्युदयश्रुतिः ।
प्रत्येकं ह्लादयांचक्रे कुल्येवोद्यानपादपान् ॥

पदच्छेदः :- सा पौरान् पौरकान्तस्य रामस्य अभ्युदयश्रुतिः प्रत्येकं ह्लादयांचक्रे कुल्या इव उद्यानपादपान्। (१० पादानि)

शब्दधातुरूपाणि :-

सा - सा ते ताः - दका.स्त्री. तच्छब्द.प्र.एक. ।

पैरान् - पौरं पौरौ पौरान् - अका.पु.द्वि.बहु ।

पौरकान्तस्य - कान्तस्य कान्तयोः कान्तानां उका.पु.ष.एक. ।

रामस्य - पूर्वोक्तम् ।

अभ्युदय श्रुतिः - श्रुतिः श्रुती श्रुतयः - इका.स्त्री.प्र.एक. ।

प्रत्येकं, इव - अव्य

ह्लादयाञ्चक्रे - चक्रे चक्राते चक्रिरे - 'ह्लादी सुखे' - इति धातोः लिटि.प्र.एक. ।

कुल्या - कुल्या कुल्ये कुल्याः - आका.स्त्री.प्र.एक. ।

उद्यानपादपान् - पादपं पादपौ पादपान् - अका.पुं.द्वि.बहु।

प्रतिपदार्थः :- पौरकान्तस्य - நகரமக்களின் அன்பனான, रामस्य

- ராமருடைய, सा - அந்த, अभ्युदयश्रुतिः - நன்மையைப் பற்றிய செய்தி (பட்டாபிஷேக செய்தி), कुल्या - சிறு கால்வாய்,; उद्यानपादपान् इव - தோட்டத்திலுள்ள மரங்களை (மகிழ்விப்பது) போல, पौरान् - நகர வாஸிகளை, प्रत्येकं - ஒவ்வொருவரையம், ह्लादयाञ्चक्रे - மகிழ்வித்தது.

व्याकरणविशेषः -

पौरान् - पुरे भवाः पौराः तान्।

पौरकान्तस्य - पौराणां कान्तः। तस्य।

अभ्युदयश्रुतिः - अभ्युदयस्य श्रुतिः।

प्रत्येकम् - एकं एकं प्रति।

कोषः - 'कुल्याल्पा कृत्रिमा सरित्' 'विटपी पादपस्तरुः'

भावार्थः :—साकेतविषयवासिनाम् अभिमतस्य श्रीरामस्य सा पट्टाभिषेकवार्ता, यथा वा उद्याने काचित् कुल्या प्रत्येकं तरुं आह्लादयति, तद्वत् नगरवासिनां सर्वेषाम् मनसि आह्लादं जनयति स्म।

विशेषः :- उपमा कालिदासस्य इति प्रसिद्धिः । ततोऽपि उपमानोपमेययोः समानलिङ्गकत्ववर्णनं वरीवर्ति। अस्मिन् पद्ये 'अभ्युदयश्रुतिः पौरान् ह्लादयाञ्चक्रे' । 'कुल्या पादपान् ह्लादयाञ्चक्रे' । श्रुतिकुल्ययोः स्त्रीलिङ्गत्वं पौरान् तथा पादपानित्यत्र तु पुल्लिङ्गनिर्देशः इति उपमानोपमेयभावः लिङ्गसाम्येन राजते इदं पद्यम् ।

## चतुर्थ श्लोकः

तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया ।

दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः ॥

पदच्छेद :- तस्य अभिषेकसंभारं कल्पितं क्रूरनिश्चया दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः ॥ (६ पदानि)

शब्दधातुरूपाणि

तस्य - तस्य तयोः तेषां - दका.पु. तच्छब्दः ष.एक. ।

अभिषेकसंभारं - संभारं संभारौ संभारान् - अका. पु.द्वि.एक।.

कल्पितं - कल्पितं कल्पितौ कल्पितान् - अका.पु.द्वि.एक ।

क्रूरनिश्चया - निश्चया निश्चये निश्चयाः आका.प्र.एक.।

कैकेयी - कैकेयी कैकेय्यौ कैकेय्यः । ईका.स्त्री.प्र.एक।

दूषयामास - आस आसतुः आसुः - दुष वैकृत्यै (णिजन्ते) इति धातोः लिटि.प्र.पु.एक।

शोकोष्णैः - उष्णेन उष्णाभ्यां उष्णैः - अका.नपु.तृ.बहु।

पार्थिवाश्रुभिः - अश्रुणा अश्रुभ्यां अश्रुभिः - उका.नपु.तृ.बहु।

प्रतिपदार्थः - क्रूरनिश्चया - கொடிய தீர்மானம் கொண்ட, कैकेयी - கைகேயி, तस्य - ராமருக்கென்று, कल्पितं - தயார் செய்யப்பட்ட, अभिषेकसंभारं - அபிஷேக பொருள்களை, शोकोष्णैः - துக்கத்தால் உஷ்ணமான, पार्थिवाश्रुभिः - அரசனது கண்ணீர்களால், दूषयामास - கெடுத்தாள்.

*व्याकरणविशेषः :-*

अभिषेकसंभारं - अभिषेकस्य संभारः - तम्।

क्रूरश्चिया - क्रूरः निश्चयः यस्याः सा।

शोकोष्णैः - शोकेन उष्णानि - तैः

पार्थिवाश्रुभिः - पार्थिवस्य अश्रूणि - तैः ।

कोषः -राजा राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः । 'दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च, कर्कं कठिनं क्रूरं कठोरं निष्ठुरं दृढम्' ।

भावार्थः - श्रीरामस्य पट्टाभिकव्यवस्थां विधाय कैकेयीं दिदृक्षुरासीद् दशरथः । परं रामपट्टाभिषेकं सा नैच्छत् । तेन उद्विग्नमनाः दशरथः रुरोद । राज्ञः नेत्राम्बुभिः पट्टाभिकोत्सवस्य विघ्नं सा चकार ।

*——'र.रङ्गनाथः सं.वि.समितिः -काञ्चीपुरम्'*

किं भावि कस्य नु कदा कथमेवमादि-
प्रारब्धसङ्गतिमिहार्हति को विवेक्तुम् ।
एको यतिर्नियमितायतिरेव साक्षात्
पश्यन्करामलकवद्विविनक्ति सर्वम् ॥

யாருக்கு, எத்தகைய நிகழ்வு, எப்பொழுது, எப்படி நடக்கவுள்ளது என்பது போன்ற வாழ்க்கை நடப்புத் தொடரை யார்தான் கணித்துச் சொல்ல முடியும்? (முடியாதுதான்) ஆனல், இனி வரப்போகும் நாட்களில் நடக்க விருப்பதையும் தன் கையில் அடக்கியுள்ளவர் போல் கையில் இருக்கும் நெல்லிக் கனியைப் போல் பார்த்து, துல்யமாக விவரிக்க/விளக்க புலனடக்கமுள்ள ஒரு ஸன்யாஸி வல்லவராக இருக்கலாமே! இருக்கிருரே!

# शब्दविमर्शः - मन धातोरनेकार्थप्रयोगः ।

*डा.वि.आर्, मनोज्ञः, उपनिर्देशकः, चिन्मयशोधसंस्थानम् ।*

मन ज्ञाने (दिवा.११७७) इत्ययं धातुः बहुधा भिन्नेष्वर्थेषु प्रयुक्तो दृश्यते । ते प्रसिद्धा अर्था इमे -

१. अनवधानेऽर्थे निमनीभवति तता मिनायते इत्यत्र विपूर्वः मन धातुः । विमनीभवति इत्यत्र 'सर्व धातुभ्योऽसुन्' (उणा.४.६३८) इति करणे असुन् । विह्वलं विरुद्धं विगतं वा मनः । अभूततद्भावे इत्यनुवर्तमाने 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' (५.४.५०) इति च्विः । 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' (५.४.५१) इति लोपः । स च 'अलोऽन्त्यस्य' (१.१.५२) इति मनस् शब्दे्न्त्यस्य सस्य । प्रमादोऽनवधानता इत्यमरः ।

२. अनादरेऽर्थे अवमन्यते इति अवपूर्वः मन धातुः । अनादरः परिभवः परीभावस्तिरस्क्रिया । रीढावमाननाव-ज्ञावहेलनमसूक्ष्मणमित्यमरः ।

३. अनुज्ञायामर्थे अनुमन्यते इत्यनुपूर्वः मन धातुः प्रयुज्यते । कस्मिंत्कर्मणि स्वयं प्रवृत्तस्य प्रवृत्त्यविघातकरणेन प्रवर्तनारूपायामनुमतौ अनुज्ञाशब्दः प्रयुज्यते ।

४. आदरे सम्मन्यते इति सम्पूर्वस्य मन धातोः प्रयोगः । गौरवहेतुके सम्माने आदरशब्दः प्रयुज्यते ।

५. उत्कण्ठायामर्थे उन्मनायते इति उत्पूर्वः मन धातुः प्रयुज्यते ।

'सर्वधातुभ्योऽसुन्' (उणा. ४.६३८) ति करणे असुन्। उद्गतमुत्कण्ठितं वा मनः । 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' (३.१.१२) इति क्यङि 'अकृत्सार्वधातुकयोर्दीर्घः' (७.४.२५) इति क्यङन्तस्य धातुत्वाल्लडादषु रूपम्। उत्कण्ठोत्कलिके समे इत्यमरः ।

६. गर्वेऽर्थे अभिमन्यते इत्यभिपूर्वस्य मनधातोः प्रयोगः । गर्वोऽभिमानोऽहङ्कारः इत्यमरः ।

७. ज्ञानेऽर्थ मन्यते इति मन धातो रूपं प्रयुज्यते । मोक्षे धीर्ज्ञानमित्यमरः । पारिभाषिकश्चैतत् । लौकिकेष्वपि विषयेषु ज्ञानशब्दः प्रयुक्तो दृश्यते। प्रथमोपकृतं मरुत्वतः प्रतिपत्त्या लघु मन्यते भवानिति कालिदासः (शाकु. ७.१) ।

८. विमतावर्थे विमन्यते इति प्रयुज्यते। विपूर्वस्य मन धातोः रूपम्। विरुद्धमतियुक्ते व्याकुलचित्ते वा प्रयुज्यते।

नाद्यास्तीति भ्रान्ति-भीतस्वान्तेऽस्मीति प्रदर्शकः ।
काञ्च्यां श्रीकामकोट्याख्यपीठगः शङ्करो गुरुः ।।

'இன்று அவரில்லையே' என்று ஏங்கிப் பயந்த உள்ளத்தில் 'இதோ இருக்கிறேன்' என்று தன்னைக் காட்டுபவர், காஞ்சியில் ஸ்ரீ காமகோடி பீடத்திலமர்ந்த ஸ்ரீ சங்கராசார்யர்கள்.

-ஸ்ரீS.V. ராதாகிருஷ்ண சாஸ்திரி

- பரமபூஜ்ய. ஸ்ரீ சந்த்ரசேகரேந்த்ர ஸரஸ்வதீ ஸ்ரீ சரண ஸஹஸ்ரநாம ஸ்தோத்ரம் 224

# सीतायाश्चरितं महत्। *(अनुवर्तते)*

—*M.S. विश्वेश्वरशास्त्री, तिल्लैगङ्गानगर्, चेन्नै।*

चतुर्थं तु इदं विद्यते — चित्रकूटपर्वते प्राज्यमूलफलोदके सिद्धाश्रमे वसन्ती, मन्दाकिन्या अदूरतः विहृत्य सलिलक्लिन्ना सीता शेते स्म। तदानीं मांसेच्छुर्वायसः सीतां वक्षसि पर्यतुण्डयत्। तं लोष्टेन वारयति स्म सा। स तु तत्रैव परिलीयते, नान्यत्र गच्छति न चाप्युपारमत् मांसाशनात्। रशनया ताडयितुं सीता तां उच्चकर्ष, वस्त्रे स्रस्यंमाने रामेण दृष्टा, परिहसिता क्रुद्धा, संलज्जिता चाभवत्। एवं द्वित्रवारं वायसेन क्षोभिता, स्तनयोर्वितुन्ना चाभवत्। श्रीरामस्तादृशीं तां दृष्ट्वा क्रुद्धःश्वसन्वाक्यमभाषत—

'कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना।' इति।

सीताभिमुखमेव स्थितं शक्रस्य पुत्रं तं विज्ञाय तस्मिन् क्रूरां मतिं चकार। संस्तरात् दर्भमेकमाकृष्य ब्राह्मेणास्त्रेण योजयन्तं वायसं प्रति चिक्षेप। स दर्भः अम्बरेऽनुजगाम वायसम्। त्राण-काम इमं लोकं सर्वं वै विचचार ह। स पित्रा च परित्यक्तः स्सर्वैः समहर्षिभिः। त्रीन् लोकान् संपरिक्रम्य तमेव शरणं गतः। वधार्हमपि काकुत्स्थः कृपया पर्यपालयत्। शरण्यो रामः, शरणागतश्च काकः। किमभवत्? — श्रीरामः तं अवदत् —

'मोघं कर्तुं न शक्यं तु ब्राह्ममस्त्रं तदुच्यताम्'

सोऽब्रवीत् — 'हिनस्तु दक्षिणाक्षि त्वच्छ इति'। ततस्स दक्षिणं नेत्रं दत्वा प्राणेभ्यः परिरक्षितः। स रामाय नमस्कृत्वा

राज्ञे दशरथाय च। विसृष्टस्तेन वीरेण प्रतिपेदे स्वमालयम्। एवं दुष्टशिक्षणेऽपि कारुण्यं करस्थीकृतं रामेण।

यदा, साक्षाद्राक्षसेश्वरस्य रावणस्य भ्राता विभीषणः शरणम् इति ब्रुवाणः कारुण्यवारांनिधिना रामेण रक्षित एव। विभीषणो विललाप — रावणो नाम दुर्वृत्तो रावणो राक्षसेश्वरः।

तस्याहमनुजो भ्राता विभीषण इति श्रुतः॥

'उच्यमानं हितं वाक्यं विपरीत इवौषधम् न प्रतिजग्राह। सोऽहं परुषितस्तेन दासवच्चावमानितः।

त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः।

सर्वलोकशरण्याय राघवाय महात्मने॥

निवेदयत मां क्षिप्रं विभीषणमुपस्थितम्।' इति।

रामे समासक्ताः रामसेवका इति विश्रुताः एकैकशः स्वस्वमतमाविश्चक्रुः। जाम्बवानपि 'बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः। अदेशकाले सम्प्राप्तः सर्वथा शङ्क्यतामयम्' — इति शास्त्रबुद्ध्या वाक्यमुवाच।

सचिवोत्तमः हनूमानेवं प्रतिपेदे—

'उद्योगं तव सम्प्रेक्ष्य मिथ्यावृत्तं च रावणम्।
वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम्॥

राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः।
एतावत्तु पुरस्कृत्य युज्यते त्वस्य संग्रहः॥' इति।

सुग्रीवोऽपि– 'रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः 'तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर !' इत्याद्युवाच । सर्वेषामाशयान् श्रुत्वाऽपि श्रीरामः तत्र स्वाशयं सुदृढं सुनिश्चितं चावोचदेवम् । विभीषणव्याजेन स्वमनोगतं शरणागतरक्षणव्रतं गम्भीरमाह—

'सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥

आनयैनं हरिश्रेष्ठ ! दत्तमस्याभयं मया ।
विभीषणो वा सुग्रीव ! यदि वा रावणः स्वयम् ।' इति ।

आदिकाव्यस्य नामकरणाय समुदितं, समुत्कृष्टं च हेतुजातं यद्यत् तत्, अत्र सविशेषं प्रख्यापितमित्यत्र न संशयः । यद्यवशिष्यते इदमप्येकं कारणं वक्तुमुचितम् । तदिदम् — मध्यमाम्बावृतान्तः । रामश्चेन्नाभविष्यत् तद्वृत्तान्त एवान्यथा समभविष्यत् । भरतं समाश्वासयन्नेवं वदति रामः—

कामाद्वा तात लोभाद्वा मात्रा तुभ्यमिदं कृतम् ।
न तन्मनसि कर्तव्यं वर्तितव्यं च मातृवत् ॥

कैकेय्यानन्दवर्धनो भरतोऽप्यञ्जलिमाधाय शिरसि, सत्यसन्धं श्रीराममेवं वदति राज्यप्रतिनिवर्तनसमये—

पूजिता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥

एवं अदिकाव्यं प्रथते अनादिकालात् श्रीरामायणमिति ।

'सीतायाश्चरितं महदि' त्यपि नामकरणमुचितमेव शतशः यदा वयं आदिकाव्यं पुनरावर्तयामो बालकाण्डात् आरभ्य उत्तरकाण्डे सप्तनवतिसर्गपर्यन्तम्——

'सीतायनम्' —— इति नाम, अथवा 'सीतायाश्चरितं महत्' इति नाम साधु घटत एव। यदि स्वतन्त्रनायिका भवति सीता। परन्तु, सीता स्वयं वदति–नाहं स्वतन्त्रा 'अनन्या राघवेणाहं भास्करेण प्रभा यथा' इत्यादि। वनवासप्रस्थानसमयेऽन्त्र च रामछायेवानुगता एव भवति।

शरणागतरक्षणं तु उभयोस्तुल्यम्। तत्र सीता विशिष्यते च मात्रया। प्रार्थितः शरणं रामः प्रसन्नतया रक्षति चेत्, सीता अप्रार्थितैव लङ्कायां घोराः राक्षसीः रक्षति। ताः खलु राक्षस्यस्तां दृढं विश्वसन्ति —— 'प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा' इति। हनूमन्तमपि तासां घातनायत्तं निषिध्य 'न कश्चिन्नापराद्ध्यति, आज्ञप्ता राक्षसेनेह राक्षस्यस्तर्जन्ति माम्। हते तस्मिन् न कुर्वन्ति तर्जनं मारुतात्मज ।।' इति। एवं सीतासमासक्तभावा भावुकाः 'सीतायनम्' इति स्वतन्त्रग्रन्थानपि निरमासत।

प्रतिनायकं पुरस्कृत्य तन्नाम्ना (वध-भङ्ग-दूषणादि)
अश्लीलनामाङ्कितानि काव्यानि न बहूनि संस्कृतसाहित्ये।
अतः पौलस्त्यवधनाम्ना रामायण्य प्रसिद्धिर्नास्ति ।।

——*——

# कावेरीस्तोत्रम्

--श्री सुन्दरराजः, I.A.S. (Retd.) भुवनेश्वरम्।

स्पन्दितं हरिपादाग्रात् स्वर्णदं देववन्दिताम्।
नन्दितां ब्रह्मणा वीक्ष्य सासूया विरजाऽभवत्॥

वैकुण्ठतटिनी साऽहं नृणां कारणकारिणी।
कथं पूततरा ब्रह्मन्। भूयो भूयां वदस्व मे॥

लोकेऽवतीर्य विरजे तपस्तप्त्वा ततश्चिरम्।
इत्याह विरजं ब्रह्म साक्षाल्लोक पितामहः॥

अगस्त्यपत्नी भूत्वा त्वं चरन्ती दक्षिरापथे।
तत्र स्वर्णनदी भूयाः पापहा लोकपावनी॥

श्रीरङ्गनाथं श्रीरङ्गे आलिङ्गन्ती दिवानिशम्।
तत्पदं धावयन्ती च तद्भक्तानां भविष्यसि॥

तदा दक्षिणगङ्गा त्वं भवेस्स्वर्णनदी पुनः।
स्वर्णद्यभ्यधिका लोके भूयाः स्वर्णनदी तदा॥

पौराणिककथामेनां विदुः पौराणिकर्षयः।
स्वर्णदीस्वर्णनद्यौ स्तः जाते लीने युगे युगे॥

कलिङ्गे प्रथिते राज्ये कवेराख्यो नृपोऽभवत्।
कावेरी तनया तस्य लोपामुद्रेति विश्रुता॥

कवेरराजः कावेरी लोपामुद्रां चरितुं दक्षिणापथे।
पत्नीं तु सुकुमारीं तद्व्यदधादम्मयीमृषिः॥

*गोयब्बल् सिद्धान्तः*

पौनःपुन्येन घुष्टं चेत् असत्यं सत्यतां व्रजेत् ।
प्राज्ञेन गोयब्बल् नाम्ना सिद्धान्तोऽयं प्रवर्तितः ॥

*प्रभो नवकलेवरमुद्दिश्य*

अमङ्गलं यात्युपयाति मङ्गलं
सुमङ्गलीभूतदिशोऽधुना दश ।
प्रसन्नवातावरणोत्कले जनः
पुनर्णवे नन्दति नाथजन्मनि ॥

*स क्व धर्मः*

कति कति न हि नेतारश्चरन्तोऽत्र सन्ति
नृपपदमधिगत्य स्वार्थकामास्तथापि ।
अचरदिह हि रामो नाम यो नार्थसेवी
ऋषिपथमनुयायी धर्मवान् स क्व धर्मः ॥

*कृपाकर कृतागसं कृपणमेनमुद्धारय*

च्युतसत्वदपराधतः पतित एष सीदाम्यहं
भयङ्करभवार्णवे मकरनक्रचक्राकुले ।
तदवस्थ इह यद्यपि त्वमसि देहिनामच्युतः
कृपाकर कृतागसं कृपणमेनमुद्धारय ॥

*कवित्वमतिदुर्लभं*

दुर्लभं मानुषं जन्म विद्यावत्वं सुदुर्लभं ।
विद्यावत्स्वपि तेष्वेकं कवित्वमतिदुर्लभम् ॥

**अहोरात्रमहो कृतं**

अहोरात्रमहोरात्रं अहोरात्रमहो कृतं।
अहोबिलनृसिंह त्वं अंहस्संहर रंहसा ॥

***कर्म धर्मपथगं हि शर्मणे***

गर्ममर्म भुवि वर्ष्म-चन्दनं नर्म कर्म भुवि मर्मभिद्भवेत्।
धर्मवर्मकृतकर्म निष्फलं कर्म धर्मपथगं हि शर्मणे ॥

**बुधविबुधविभेदः**

बिरुदैर्मुदता बुधा मुधैते बिरुदालाभविषादतो रुदन्तः।
अरुदा अनघा अवन्ध्यविद्याः विबुधा विश्व-सभाजिता जयन्ति ॥

***वस्तुतत्त्व विमर्शः***

नास्ति वस्तु तव वा ममापि व न द्विडस्ति न सखा परो निजः।
न त्वया न च मया प्रवर्तते ब्रह्मक्लृप्तचलचित्रवत् जगत् ॥

सतां जगन्ति मित्राणि सन्तोषधनशालिनाम्।
धनी द्वेष्यस्तु सर्वेषां नग्नग्राम इवां शुकी ॥

மனதில் ஸந்தோஷம் என்ற பெரும் செல்வம் நிறைந்த நல்லோர்க்கு உலகம் முழுதுமே நட்பு பாராட்டும். ஆனால், அங்கு சாதாரண ஒரு செல்வந்தன் என்றால் அவனை, ஆடையில்லா ஊரில் துணி கட்டியவனைப் போல் அருவருப்புடன் தான் காண்பர் மக்கள்.

—க்ஷேமேந்த்ரர் - பாரதமஞ்ஜரீ 3.11

# श्री साई कर्णामृतम्

—*Sri Ramakrishnan V. Mumbai*

**श्लोक 4 :**

**भजे सायिरामं नितान्ताभिरामं**
**मुखाभा-जितांभोधराच्छन्न - सोमम्**
**सुमन्दं प्रविन्यस्त पादारविन्दं**
**करे चारुलीलं सतालं दयालुम्**

I honour the compassion filled SaiRama who is extraordinarily beautiful, who has conquered (the world) by the radiance of His face, whose face is (verily) like the moon covered by the rainclouds (like curly mop of hair), slowly placing His lotus feet (on the ground), who indulges in elegant sports(past time), Keeping the beat (for the music) with His hands.

**श्लोक 5 :-**

**संत्यक्तेषु-शरासनो रघुपतिः कृष्णो विना वेणुना**
**शंभुर्भालविलोचनेन रहितो निश्शङ्खचक्रो हरिः ।**
**वेधास्त्यक्त-कमण्डलुर्विरहितश्शक्त्या स्वहेत्या गुहः**
**सर्वे पतिपुरे लसन्ति सरसाः श्री सायिनाथात्मना ।।**

Sri Rama who has given up the bow and the arrow, Sri Krishna without the flute, Lord Shiva - bereft of the third eye (on the forehead), Maha Vishnu who doesn't have the conch and the discus, Creator (Brahma)who has given up the waterpot (used by ascetics), Lord Muruga bereft of the spear Shakti, all (these deities) full of love shine in Puttaparti in the character of Lord SathyaSai.

# ग्रन्थलिपिज्ञानमत्यावश्यकम्।

प्राचीनवेद-धर्मशास्त्र-कलाग्रन्थेषु, शिलालेखेषु च प्राचीनैस्तदानींतनसौकर्यानुसारमुपयुक्ता ग्रन्थलिपिप्रक्रिया । जलप्रवाहे, अग्निदाहे, प्रकृतिप्रक्षोभे चेति बहुधा विनष्टान् कोशग्रन्थानतिरिच्य इदानीं केषांचिन्महामनसामत्यादरेण परिरक्षितानां प्राच्यविद्याकोशागारेषु, सर्वकलाशालाग्रन्थालयेषु, मन्दिरेषु, सरस्वतीमहाल् सदृशेषु कोशागारेषु चाद्यावधि अनासादितप्रकाशानां च तालपत्रादिकोशग्रन्थानां शिलालेखानां च संख्याः लक्षशो भवेयुः । किंचिदिव प्रयासमङ्गीकृत्य यदि अद्यतनभारतीयैरयं ग्रन्थलिपि-परिज्ञानप्रकारस्समाद्रियेत महते फलाय श्रेयसे च भूयात् । इदानीं ग्रन्थलिपिपरिशीलनारम्भः — प्रथमं अचः (स्वराक्षराणि)

(இவற்றை பலமுறை எழுதிப் பழகவும்).

| अ | आ | इ | ई | उ | ऊ | ऋ | ॠ |
|---|---|---|---|---|---|---|---|
| 𑌅 | 𑌆 | 𑌇 | 𑌈 | 𑌉 | 𑌊 | 𑌋 | 𑍠 |

| ऌ | ए | ऐ | ओ | औ | अं | अः |
|---|---|---|---|---|---|---|
| 𑌌 | 𑌏 | 𑌐 | 𑌓 | 𑌔 | ം | ः |

| 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 | 9 | 0 |
|---|---|---|---|---|---|---|---|---|---|
| க | உ | ௩ | ௪ | ரு | ௬ | ௭ | ௮ | ௯ | ೦ |

आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानां आत्मन्यप्रत्ययं चेतः ॥

அறிவாளிகள் மெச்சி மகிழ்வெய்தும்வரை கையாளும் பழக்கம் திறமானதென எண்ணுவதற்கில்லை, ஏன்? நல்ல முறையில் பயின்றிருந்தாலும் (பயின்றிருப்பவருக்கே) தன் நிலையில் நிறைவு வருவதில்லையே !

—அபிஜ்ஞான சாகுந்தலம், காளிதாஸன்

# ग्रन्थलिपिपरिज्ञानम्

## ஹல: ஹல் எனப்படும் மெய்யெழுத்துக்கள் (உயிர்மெய்யெழுத்துக்கள்) கீழே கொடுக்கப்பட்டுள்ளன.

| 𑌕—क, ka | 𑌖—ख, kha | 𑌗—ग, ga | 𑌘—घ, gha | 𑌙—ङ, ña |
|---|---|---|---|---|
| 𑌚— च ca | 𑌛—छ, cha | 𑌜—ज, ja | 𑌝—झ, jha | 𑌞—ञ ñ |
| 𑌟— ट, ṭa | 𑌠—ठ, ṭha | 𑌡—ड, ḍa | 𑌢—ढ, ḍha | 𑌣—ण, ṇa |
| 𑌤— त, ta | 𑌥—थ, tha | 𑌦—द, da | 𑌧—ध, dha | 𑌨—न, na |
| 𑌪—प pa | 𑌫—फ pha | 𑌬—ब ba | 𑌭—भ bha | 𑌮— म ma |

क् + अ = क      च् + अ =च

ख् + अ = ख      छ् + अ = छ

ग्+ अ = ग      ज् + अ = ज

घ् + अ = घ      झ् + अ = झ

ङ् + अ = ङ      ञ् + अ = ञ

இதுபோல் எல்லா மெய்யெழுத்துக்களும் உயிர் மெய்யழுத்துக்களாகவே கொடுக்கப்பட்டுள்ளன. உச்சரிக்க சுலபமாக இருக்கவே, அவ்வாறு வழக்கத்தில் உள்ளன.

இவற்றை எத்தனை தடவை எழுதிவந்தால் தவறில்லாமல் எழுத முடியுமோ, அத்தனை தடவை எழுதிப் பழக வேண்டும்.

# रामाष्टपदी

(Sri P.R.Kannan, Mumbai)

शुचिमांसमधुना भावित-मधुना स्वीकुरु धरणीसुते ।
उपविश विमले आनत-द्रुमतले शीतल-मृदुमारुते ॥ (दयिते)

O daughter of Bhumi, take these clean fleshy fruits now along with good honey. O spotless one, sit under this stooping down tree, where cool wind blows.

अतिदूनौ चरणौ कृतवन-चरणौ विधराङ्गे मम साम्प्रतम् ।
खेदापनयनं मृदुतर-रचनं कलयामि यदा ते हितम् ॥
(दयिते)

Place now your feet, very much pained, having moved about in the forest, on my lap; let me do you good by pressing your soft feet so as to remove the misery.

श्रीरामकविना निगदित-ममुनादृत-मार्यकवि-सम्सदा ।
वैदेही-ललितं रघुवर-महितं विधुनोतु दुरितं सदा ॥ (दयिते)

May this song by Sri Ramakavi, cherished by the assembly of learned poets, containing the outpourings of Raghuvara towards the delicate Vaidehi remove misery always.

श्लो ॥ नीतो राक्षसनाशनाय मुनिभी रामो दिशं दक्षिणां
पश्य-न्नाश्रम-वासिन-स्स्वयमपि द्राक् पञ्चवट्याश्रयः ।
सीता-लुब्ध-दशास्य-चोदित-वलन्मारीच-मायामृग-
व्याकृष्टो निहतेनन् तेन करुणाक्रन्दै-रभू-त्वञ्चितः ॥\

Slokas

Rama, who was led by sages towards the southern direction for the purpose of killing Rakshasas (who were troubling the sages), saw many of the sages living in Asramas in Panchavati area. In the meantime, persuaded by the ten-headed Ravana, who lusted after Sita, Maricha in the guise of an illusive golden deer attracted Sita. Rama killed Maricha, who cried piteously (in Rama's voice) and was thus cheated.

श्रान्तो भृशं तदनु पञ्चवटीकुटीर-
मागत्य तत्र जनकेन्द्र-सुता-मपश्यन् ।
मोहाकुलो विरह-कातर-धी-र्वनान्ते
विष्वक् भ्रमन् बहुविधं विललाप रामः ॥

A very tired Rama then reached his hut in Panchavati and, not finding Janaki there, he felt very grieved, confused and vexed on separation and, wandering in the forest all around, he wailed inconsolably.

***This Ashtapadi is in absolute contrast to Ashtapadi 7, where the 'bhayanaka' rasa was employed to frighten Sita of the dangers of forest life. Here Rama wishes to make Sita happy by any means available in the forest, where natural beauty and allurement are in abundance. The poet resorts to the rare use of 'Sringara' rasa, but without affecting in the least upon the strict code of conduct of a Tapasvi (observer of austerity), which Rama and Sita exemplify.***

## ॥ एकादशाष्टपदी ॥

(वदसि यदि इतिवत्)

## ASHTAPADI 11

(Like in Vadasi yadi)

मुखारि रागेण]

[झंपतालेन गीयते

Raga Mukhari]

[Tala Jhampa

दरहसित-सुन्दरं तव वदनपङ्कजं दर्शय सकृन्मम सलीलम् ।
तरल-तरलायते हृदय-मधुनाधिकं वहति परिताप-मतिवेलम् ॥

वने क्वासि सीते वचनमयि देहि सुकुमारं
मयि वद निरागसि क्रोध-मुपयासि किं मुञ्च

परिहासमतिदूरम् ॥ (वने)

O Sita, show me once your beautiful and sportive lotus face with gentle smile. My heart trembles very much now and is very aggrieved. Where are you in the forest; give me your sweet words; tell me whether you are angry with me, who am faultless; leave joking aside very far.

प्रेयसि सहायतां प्राप्य किल ते
मया गहनभुवि देवि चिरकालम् ।
नगरमपि मुञ्चता स्वजनमपि मुञ्चता
नगणितमभूद् सुखजालम् ॥ (वने)

O beloved Devi, with your help I spent quite a long time in this forest land, leaving city behind, leaving my own people behind; the web of pleasure became irrelevant.

प्रणयिनि परीक्षितुं किमुत मम मानसं
क्वचन गहने किमसि लीना ।
अल-मल-मितोऽधिकं विरहचकितोऽस्मि
मे जीवितकला भवदधीना ॥ (वने)

O beloved, are you putting my mind to test? Where are you hiding in this forest? Enough of this, I am shocked due to this separation; my lifestyle is under your care.

रहित-मधुनैकया भुवन-मखिलं त्वया
शून्यमिव भाति मम नूनम् ।
मम कि-मयोध्यया प्राण-वहनेन वा
स्फुरति मम न प्रतिविधानम् ॥ (वने)

With all sweetness of yours gone, the entire earth appears empty to me now. For me, what with Ayodhya, what with living; no counter-measure strikes my mind.

समय-मिम-मुपलभ्य विषम-शर-
पातकी मम पुनरुपांशु-वधकारी ।
तनुरपि च सज्जयत्यहह निहतोऽस्म्यहं
शिव शिव विधि-स्तदनुसारी ॥ (वने)

Taking advantage of this opportune time, the sinful Manmatha, who holds five different arrows, kills me silently and attacks my body. I am killed. Siva, Siva, destiny follows him.

बिल्व-सदृशस्तनी क्व नु कथय बिल्व सा
तिलकरुचिरां ब्रूहि तिलक वामाम् ।
क्षितिभृता-मधिनाथ कापि नृपसुन्दरी
वीक्षिता यदि शंस रामाम् ॥ (वने)

O bilva tree, tell me where is the lass with bilva-like rounded breasts. O Tilaka tree, tell me where is the lass

with beautiful mark on the forehead (or beautiful ornaments). O chief of mountains, did you see the beautiful princess anywhere, tell me.

राममयजीविते रघुवंशदीपिके हा महीवरपुत्रि हा सुशीले ।
देहि मे प्रतिवचनं देहि मम दर्शनं हा प्रिये मम हृदनुकूले ॥
(वने)

O Sita, whose entire life is suffused with Rama, o light of the Raghu lineage, o virtuous daughter of Bhumi, o Sita of noble conduct, answer me; appear before me; o beloved, o Sita, ever favourable to my heart.

रामकविना भणितमिति धरणि-
कन्यका-रहित-रघुनायक-विलापम् ।
श्रवण-मधुरं सदसि गायतां नहि भवति
मानिनी-जन-विरह-पापम् ॥ (वने)

May this song of wail of Raghunayaka separated from Sita, the daughter of Bhumi, as told by Ramakavi, be sweet of hearing; those who sing this in assemblies will not undergo the misery of separation from loved ones.

श्लो॥ शोकोन्मत्तमना वने सहभुवा रामो विचिन्वन् प्रियां
प्रत्येणं प्रतिबर्हिणं प्रतिगिरिं प्रत्यापगं प्रत्यगम् ।
पृच्छन् लक्ष्मणसान्त्वितः प्रतिपदं गच्छन् ददर्शाग्रतः
कस्या-प्याहवलक्षणं हतहयं निर्विण्ण-सूतं रथम् ॥

Slokas

Rama, with mind full of grief and, thinking of his beloved, enquired every deer, every peacock, every hill, every river and every mountain about the whereabouts of Sita. As he walked along, consoled by Lakshmana, he saw in front of him certain signs of a fight having taken place in which horses were killed, charioteer was eliminated and chariot was broken.

तमागतं वीक्ष्य रघुप्रवीर-मन्वेषमाणं जनकेन्द्रपुत्रीम् ।
प्राणैर्लुठद्भिः निजकण्ठपीठे मुह्यन् मुहुः प्राह शनैः जटायुः ॥

Seeing that chief among Raghus in search of the daughter of Janaka coming along, Jatayu haltingly spoke, with his life breath swinging in the throat and frequently lapsing into unconscious state.

***In stark contrast to the previous Ashtapadi soaked in 'Sringara' rasa, this Ashtapadi is full of 'Karuna' rasa. Rama wails inconsolably; he expresses his undying love for Sita. By talking of Sita, whose entire life is suffused with Rama and her being the light of the Raghu lineage, Rama confirms Sita's exalted position of 'Pativrata'. Like in Valmiki Ramayana, he enquires all trees, mountains and rivers about the whereabouts of Sita. At last he sees Jatayu, who conveys to him the news of Ravana's kidnapping of Sita.***

*(to be continued)*